मयापि[1] प्रभुमुपसर्पितुमवसरो न लभ्यते। यतः—

प्रियायाः प्रत्यक्षे स्मरमसृणलीलापरवशो
दृशोन्नद्धः[2] क्रीडामृग इव विनोदं रचयति।
अनध्यक्षे चास्याः कतिपयहितैरेष सहितो
वने पञ्चप्रस्थे विहरति विमुग्धो मृगयया ॥२॥

( सचिन्तम[3] )

अविज्ञाताभिख्यं प्रभुमुपकृतिव्यापृतिपरं[4]
सखायं प्रेयांसं स्मरति न महायोगिनमसौ[5]।
ऋते[6] तं स्वालोके[7] विहरतु च लोके कथमयं
प्रकाशं कः कर्तुं प्रभवति विना मित्रमपरः ॥३॥

**चरः**—(उपसृत्य) अज्ज! पणमामि[9]।

[ आर्य! प्रणमामि। ]

**सितपक्षः**—(विलोक्य[10]) सौम्य सुलक्षण! चिरं जीव[11]। क्व प्रस्थितोऽसि?

**चरः**—किं पि अच्चाहिदं[12] राजकज्जं आवदिदं[13] तं महाराअस्स णिवेदिदुं।

[किमप्यत्याहितं राजकार्यमापतितं तन्महाराजस्य[14] निवेदयितुम्[15]।]

१. 'मया तु'—ऊ. २. 'दृशानद्धः'—ऊ, ए. ३. 'सविषादम्'—ऊ, ए. ४. '०व्यावृति०'—आ. ५. 'न मनसि कदापि स्मरति सः'—ऊ, ए. ६. 'विना'—ऊ, ए. ७. अत्र मूलपुस्तकस्था टिप्पणी 'स्वप्रकाशे' इति—अ, आ. ८. '०रति'—आ. ९. 'प्पण०'—आ. १०. '०लोक्यैनम्'—आ, पदं नास्ति—ऊ. ११. 'चिरञ्जीवी क्व'—अ. १२. '०हितं'—अ, आ, इ. १३. 'आपदि०'—ए. १४. '०राजाय'—ए. १५. '०वेदितुम्'—अ. अत उत्तरं मूलपुस्तकस्था टिप्पणी 'प्रस्थितोऽस्मीति शेषः ॥' इति—अ, आ.

**सितपक्षः**—महाराजस्य किमत्याहितं कार्यम्? न चेदप्रकाश्यं तदावद्यताम् ।

**चरः**—राअहिदेसिणो[1] दे किं णाम गोवणिज्जं? ता णिवेदेमि। चंडवेओ[2] णाम चंडबलो गंधव्वराओ सिदासिदरूएण विसाधिअसत्त-[3] सदगंधव्वसेण्णेण देअस्स णअरं[4] उअरुंधिदुं[5] आअछदि ।

[ राजहितैषिणस्ते किं नाम गोपनीयम्? तन्निवेदयामि। चण्डवेगो नाम चण्डबलो गन्धर्वराजः सितासितरूपेण विंशत्यधिक-[6] सप्तशतगन्धर्वसैन्येन देवस्य नगरमुपरोद्धुमागच्छति । ]

**सितपक्षः**—अहो महत्कष्टम्! यतो मन्देहा[7] ईवामन्देहा[8] अक्षयदेहाश्च ते गन्धर्वाः ।

**चरः**—अण्णं च । कालकण्णआ जरा णाम कावि[9] रक्खसी[10] अहीआ[11] हुविअ उअहोअणिमित्तं देअलोअं गदा । रक्खसित्ति[12] देएहिं दुरुदो[13] धिक्किदा माणुसलोए अप्पणो[14] रमणं अण्णेसंदी[15] मग्गे णारअ-[16] महेसिं अब्भत्थिदवदी[17] ।

१. 'राजहिदे०'—ए. २. 'चंडबलो चंडवेओ णाम'—ऊ, ए. ३. 'वीसाधिअ०'—ऊ, ए. ४. 'णारं'—आ, इ. ५. '०रुंधिदुं'—अ, '०रुंधिउं'—इ. ६. 'विंशाधि०'—ए. ७. अत्र मूलपुस्तकस्था टिप्पणी "अमन्दा ईहा येषां ते अमन्देहाः असुरा इव" इति—आ. ८. 'इव मन्देहा'—आ, 'इवामन्ददेहा'—ऊ. ९. 'कावि' इति नास्ति—ऊ, ए. १०. '०सि'—आ, इ. ११. 'अहिआ'—इ. १२. '०सीति'—ए. १३. 'दूरदो'—ऊ, ए. १४. 'अत्तणो'—ऊ. १५. '०संती'—आ, ऊ, ए, '०संति'—इ. १६. 'णारम०'—आ, 'णारअं महेसिं'—ऊ. १७. '०वदि'—आ, इ.

[ अन्यच्च । कालकन्यका[1] जरा नाम कापि राक्षसी अभीका[2] भूत्वोपभोगनिमित्तं देवलोकं गता । राक्षसीति देवैर्दूरतो धिक्कृता मानुषलोक[3] आत्मनो रमणमन्वेषयन्ती मार्गे नारदमहर्षिमभ्यर्थितवती । ]

**सितपक्षः**—अहो दुर्विदग्धायाः कामावेशः । ततस्ततः ?

**चरः**—तदो देण[4] अहं अइंचणो अणिएदो ण दे जोग्गो वरो कुलसील[5]धणेहिं, भअणामो जवणेसरो[6] उइदो त्ति कहंकहं[7] पि पदारिअ विसज्जिदा तं आअदवदी ।

[ ततस्तेनाहमकिञ्चनोऽनिकेतो न ते योग्यो वरः कुलशील-धनैः, भयनामा यवनेश्वर उचित[8] इति कथंकथम[9]पि प्रतार्य विसर्जिता तमागतवती ।]

**सितपक्षः**—ततस्ततः ?

**चरः**—तदो देण [10]बहिणिअ त्ति भणिदा विवण्णवअणा[11] अप्पणो अहिप्पाअं णिवेदिदवदी ।

[ततस्तेन भगिनीति भणिता विवर्णवदनात्मनोऽभिप्रायं निवेदितवती । ]

**सितपक्षः**—ततस्ततः ?

**चरः**—तदो देण लिहिदं[12]स्स उअरि को वि णं[13] प्पहु त्ति भणिअ अकल्लाणरुअं[14] त्ति जाणिअ ण को वि तुमं वरिस्सदि[15] ता अलक्खिदगदी[16]

१. '०कन्या '—आ, २. ' अभीता '—ए. ३. ' मनुष्यलो० ' —आ. ४. ' तेण '—ऊ. ५. ' ०सिल० '—इ. ६. ' जअणे० '—इ. ७. ' कहंकहिं पि '—अ, आ. ८. ' उदित '—ए. ९. ' ०कथमिव '—ए. १०. ' वहि० '—अ, आ, ऊ, ' ०णित्ति० '—ए. ११. ' ०वाणा '—आ. १२. '०हित०'—ए. १३. 'न'—इ. १४. '०रूअ०'—ए. १५. 'वरेदि' — ऊ, ए. १६. ' आल०'—अ, '०गदि '—आ, ऊ, ए, '०गति '—इ.

जेअ[1] इमं मच्चलोअं बलामोडिएण उपभुंजिहिसि[2], एदे अ[3] मह[4] जवणा[5] तुह सहाआ[6], पज्जारो[7] णाम भादा अहं च तुह अणुयायि[8] जादेम्हि[9] त्ति आसासिअ[10] सा पत्थाविदा ।

[ ततस्तेन लिखितस्योपरि कोऽपि न प्रभुरिति भणित्वा अकल्याणरूपेति ज्ञात्वा न कोऽपि त्वां वरिष्यति[11] तदलक्षितगतिरेवेमं मर्त्यलोकं बलात्कारेणोपभोक्ष्यसे[12], एते च मम[13] यवनास्तव सहायाः, प्रज्वारो नाम भ्राताहं च तवानुयायी जातोऽस्मीत्याश्वास्य सा प्रस्थापिता । ]

**सितपक्षः**—ततस्ततः ?

**चरः**—तदो मग्गे चंडवेएण सहँ[14] विआरिअ एक्कदो देण एक्कदो तए सबलाए देअस्स[15] पुरं पविसीअ[16] सछंदविहारो करणिज्जो[17] त्ति ।

[ ततो मार्गे चण्डवेगेन सह विचार्य, एकतस्तेनैकतस्तया सबलय देवस्य पुरं प्रविश्य स्वच्छन्दविहारः करणीय इति । ]

**सितपक्षः**—अयमपरो गण्डस्योपरि पिटिकोद्भेदः । दुर्निवार-प्रसरा चेयं राक्षसी, यस्याः—

१. 'ज्जेअ'—आ, इ, ऊ, 'ज्जेव'—ए. २. '०भुजि०'—इ, 'उअभुंजहिसि'—ऊ, 'उअभुंजअसि'—ए. ३. पदं नास्ति—ऊ, ए. ४. 'मम'—ए. ५. 'जअणा'—इ. ६. '०हारा'—ए. ७. 'पिज्जा०'—आ. ८. 'अणुजाई'—ऊ, 'अणुआई'—ए. ९. 'याद०'—आ, इ, '०दम्ह'—ए. १०. पदद्वयं नास्ति—ऊ, ए. ११. 'वृणुते'—ए. १२. '०सि'—ए. १३. 'महायवना०'—आ. १४. पदं नास्ति—ऊ, ए. १५. 'देव०'—अ, ए. १६. '०सिअ'—इ, ऊ, ए. १७. '०णिज्ज'—ऊ, '०णीज्जो'—ए.

पाणिभ्यां परितः प्रपीडय निभृतं निश्चोत्य[1] निश्चोत्य[2] च
स्वच्छन्दं फलवज्जगन्ति रभसादास्वादयन्त्या अपि ।
अब्धिं कुम्भभुवो यथा हुतभुजः[3] काष्ठौघमिद्धं[4] यथा
सत्सूक्तानि यथा श्रुतेः[5] सुमनसां नासीदलम्प्रत्ययः[6] ॥४॥

**चरः**—भअवं ! अवि[7] अत्थि को[8] वि एत्थ[9] उआओ[10] ?
[ भगवन् ! अप्यस्ति कोऽप्यत्रोपायः ? ]

**सितपक्षः**--अस्ति ।

**चरः**—तं[11] पआसेहि ।
[ तत् प्रकाशय । ]

**सितपक्षः**--अस्ति चास्य राज्ञः[12] सहजसुहृदविज्ञातलक्षणो महाप्रभावो[13] गोस्वामी ।

प्रियायास्मै सख्येऽर्पयति यदि कोशं[14] स सकलं[15]
समस्तास्ता गाश्च प्रबलयवनत्रासचकिताः[16]
स योगी[17] तां भूतिं सपदि[18] सुहृदे दास्यति[19] यया
न तस्या राक्षस्या न यवनपिशाचादपि भयम् ॥५॥

---

१. 'निश्चोष्य'—आ. २. 'निश्चित्य'--अ, 'निश्चोष्य'--आ. ३. 'हुत॰'--अ. ४. '॰मिद्धो'--इ. ५. 'श्रुते'--अ, आ, ए, '॰श्नुते'--इ. ६. '॰दयं'--अ, 'किं स्याद॰'—आ. ७. पदं नास्ति—ए. ८. 'कोपि'—ए. ९. 'एत्थं'—आ, 'अत्थ'—ए. १०. 'उवाओ'—ऊ, ए. ११. पदं नास्ति—ऊ, ए. १२. 'राज्ञे'—आ. १३. 'गोस्वामी महाप्रभावः'—ऊ. १४. '॰षं'—आ, ऊ, ए. १५. 'समुदितं'—ऊ, ए. १६. '॰त्रासविकलाः'—ऊ, '॰विकलः'—ए. १७. '॰गीनां'—इ. १८. 'स यदि'—इ. १९. 'यास्यति'—इ.

अपि च

पत्रं च पुष्पं च फलं जलं च
भक्तिप्रदत्तं बहु मन्यते सः ।
सर्वा[1]र्थपूर्णस्य धनाद्यपेक्षा
[2]न तस्य काचित् स्वसुखानुभूतेः ॥६॥

**चरः**--[3]जइ [4]ईरिसो अस्स [5]सहा अत्थि ता कदा वि कुदो ण संभावेदि ?

[ यदीदृशोऽ[6]स्य सखास्ति तत्कदापि कुतो न संभावयति ? ]

**सितपक्षः**--स्त्रीपारवश्यात् ।

प्राणेभ्योऽपि प्रियतमाद्दारयन्ति सुहृज्जनात् ।
यतस्ततो धार[7]यन्ति ' दार ' शब्दमिह स्त्रियः ॥७॥

[8]अपूर्वमस्य स्त्रीपारवश्यम् । [9]तथा [9]हि—

पिबन्त्यां कान्तायां पिबति रसयन्त्यां रसयति
स्वप[10]न्त्यामे[11]तस्यां स्वपिति निगदन्त्यां निगदति ।
[12]विषीदन्त्यां सीदत्यहह विलसन्त्यां विलसति
प्रहृष्यन्त्यां हर्षं वहति [13]विहसन्त्यां विहसति ॥८॥

१. ' ०र्थसिद्धस्य '—ऊ.  २. ' न काचिदस्ति स्व० '—ए.
३. 'जई'—आ, इ.  ४. ' इरि० '—आ, इ.  ५. ' सहाओ '—ऊ.
६. ' तस्य'—आ.  ७. '०यति '—इ.  ८. इदं वाक्यं नास्ति—ऊ, ए.
९. पदद्वयं नास्ति—ऊ, ए.  १०. ' ०पत्यामे० '—अ.  ११. ' तस्यां तु ' —ऊ.  १२. तृतीयचतुर्थचरणयोः क्रमव्यत्यासो दृश्यते—ऊ.
१३. ' च हस० '—ऊ.

**चरः**—ता[1] तुमं अणुसंधा[2]वेहि णं[3] ।

[ तत्त्वमनुसंधापयैनम् । ]

**सितपक्षः**—यद्यपि—

हितोपदेशो मम न प्रवेशं[4]
तन्मानसे लप्स्यत इत्यवैमि ।
दोषागमापादितकोष[5]बन्धे
करः सुधाभास इवारविन्दे ॥९॥

तथापि समये मया निवेदनीयः[6] स्वामी ।

**चरः**—[7]कहिं[8] दाणिं देओ हुविस्सदि ?

[ कुत्रेदानीं देवो भविष्यति ? ]

**सितपक्षः**—[9]ह्रदिनीमवगाह्य निर्वृतो[10] देव्या सर्वतोमुखेन सेनापतिना च सममन्तःपुरद्वारवेदिकायां तिष्ठति ।

( इति निष्क्रान्तौ[11] । )

**विष्कम्भकः** ॥

१. पदं नास्ति—ऊ, ए. २. '०धावहि'—अ, इ. ३. पदं नास्ति—ऊ, ए. ४. '०वेशो'—ए. ५. '०कोश०'—इ. ६. '०नीयो वेदनीयः स्वामी—आ. ७. अतः पूर्वं 'महाराअस्स इमं वुत्तंतं णिवेदेमि।' इति वाक्यमधिकम्—ऊ, ए. ८. 'कहं'—ए. ९. अतः प्राक् 'इदानीमेव' इत्यधिकम्—ऊ, ए. १०. 'निर्वृत्तो'—आ, 'निवृत्तो'—ए. ११. पदं नास्ति—ए.

( ततः प्रविशति राजा, देवी[1], सेनापतिश्च । )

**राजा**—( सोपहासम् ) अहो अनात्मवेदिभिर्गन्धर्वैर्यवनैश्च मत्पुरमभियोक्तुमुद्योगः क्रियते । आः[2] ! का शक्तिरेतेषां पुरच्छायाम्[3]-मप्याक्रमितुम्[4] ? यतः—

सर्वत्रावलते[5] प्रजागरपुरीपालोऽनुपालोकितो[6]
मत्संभावितसर्वतोमुखचमूनाथेन संभाविताः ।
द्वारि द्वारि महोद्भटाः श्रुतधराभिख्योऽवधूतो द्युमा-
निल्याद्याः सुभटाश्चरन्ति विकटाटोपैर्बलैरन्विताः ॥ १० ॥

**सेनापतिः**[7]—देव ! सुभटानामुत्तेजनाय[8] मयापि[9] गम्यते ।

**राजा**—समीचीनमभिहितम्[10] ।

( सेनापतिः[11] प्रणम्य निष्क्रान्तः । )

( नेपथ्ये )

त्वङ्गत्[12]तुङ्गतरङ्ग[13]रिङ्गणकला रङ्ग[14]प्रसङ्गस्फुरा[15]
अञ्चत्कुन्तलतो[16]पदर्शितनभःकासारनीलोत्पलाः ।

---

१. अत उत्तरं 'च' इत्यधिकम्—ए. २. पदं नास्ति—ऊ, ए. ३. '०च्छायम०'—ए. ४. एतावानेव नाटकभागः इ पुस्तके लिखितः, अत्रैव च तद्विरमति. ५. '०र्वत्रोद्वल०'—ऊ. ६. 'नृपा०'—अ, आ, '०लोनुपा०'—ए, 'नृपालोचितो'—ऊ. ७. 'सेनानी'—ए . अत्र मूलपुस्तकस्था टिप्पणी 'मनः' इति—अ. ८. 'स्वभ०'—ए. ९. 'अपि' इति नास्ति—ऊ, ए. १०. 'अभिहितम्' इति नास्ति—ऊ, ए. ११. 'सेनानीः'—ए. १२. अत्र मूलपुस्तकस्था टिप्पणी 'त्वगि दीप्तौ' इति—अ, आ. १३. '०तुरङ्ग०'—आ, ऊ, ए. १४. अत्र मूलपुस्तकस्था टिप्पणी 'उल्लासविशेषः' इति—अ, आ; '०रङ्ग०'—ए. १५. '०स्फुरोदञ्च०'—ऊ, '०स्फुरन्मुञ्च०'—ए. १६. '०लताप०'—ए.

[1]गान्धर्वा असिताः सिताः समबला आक्रम्य पर्यायतो
　　मृद्नन्ति प्रसभं पुरञ्जननृपस्येदं पुरं सैनिकाः ॥११॥

**राजा**—आः ! किमेवमुच्यते मूर्खाः ?

( पुनर्नेपथ्ये )

धारावाहि[2]शरान्धकारविकिरैरेतैः शतैः सप्तभि-
　　र्विंशत्यभ्यधिकैः प्रचण्डचरितैस्तैश्चण्डवेगानुगैः ।
संग्रामं प्रकरोति पञ्चवदनो राज्ञः पुरं पालय-
　　न्नेकोऽयं बहुधा प्रजागरमहावीरो रणोज्जागरः ॥१२॥

**राजा**—[3]देवि ! [4]श्रूयतां त्वदीयमहावीरस्य महोदारमोजायितम् ।

**देवी**—सुदं, किंतु ताए रक्खसीए संक[5]दी मे हि[6]अअं ।
　　[ श्रुतं, किं तु तस्या राक्षस्याः शङ्कते मे हृदयम् । ]

**राजा**—का शङ्का तस्या वराक्याः ?

(पुनर्नेपथ्ये)

[7]अज्ञातोत्पतना प्रजागरमहागन्धर्वसेनासमा-
　　रम्भे सत्यनिवारितं कलयति श्वेतां पताकां निजाम् ।
उच्चैर्मूर्ध्नि पुरस्य कालतनया नीलां पताकां स्थिता-
　　मुत्तार्याम्बुधरावलीमिव वियत्यच्छां शरच्चन्द्रिकाम् ॥१३॥

[8]अपि च

---

१. 'गन्धर्वा'—अ, ऊ.　२. '०सरा०'—आ.　३. अतः पूर्वं 'महर्षम्' इत्यधिकम्—ऊ.　४. 'श्रुय०'—आ, ए.　५. '०कदि'—ऊ, '०केदि'—ए.　६. 'हीअं'—आ.　७. '०ज्ञानोत्प०'—ऊ, 'आज्ञातोत्पयना'— ए.　८. पदद्वयं नास्ति—ए.

नगरशिरसि दृष्ट्वा वैजयन्तीं स्वकीयां
समधिगतबलानां यावनीनां चमूनाम् ।
विकलितपरिखा[1]णां गोपुरे तोरणे वा
प्रसरति गतशङ्कं सर्वतः संप्रचारः ॥१४॥

**राजा**--(सशङ्कमात्मगतम्) अन्तःपुरमात्रशरणः संवृ[2]त्तोऽस्मि। ([3]सचिन्तम्)

पञ्चप्रस्थवने यथेष्टमृगयाकौतूहलं दूरतो
दूरे तद्ध्रदिनीविगाहनसुखं रुद्धे परैर्मे पुरे।
चिन्तासंततिलुप्तमानसधृतेरन्तःपुरेऽपि प्रिया—
संभाषापरिहासकेलिकलिका दूरे परास्ताधुना ॥१५॥

**देवी**—(स्वगतम्) मा[4]आविणीए तए कामिणीए गुत्तं उअ[5]हुत्तो वि[6]अ अज्जउत्तो, [7]यदो से [8]ओणिद्दं दो[9]ब्बल्लं चिंता अलसत्तणं दीहणि[10]स्ससिअं च [11]लक्खीअदि । [12]अदो [13]वरं अग्गेसु मंदाअरो हुविस्सदि त्ति ।

(इति राजानमपृष्ट्वा निष्क्रान्ता । राजा तूष्णीमास्ते ।)

[मायाविन्या तया कामिन्या गुप्तमुपभुक्त इवार्यपुत्रो, यतोऽस्यौन्निद्र्यं दौर्बल्यं चिन्तालसत्वं दीर्घनिः[14]श्वसितं च लक्ष्यते। अतः परमस्मासु मन्दादरो भविष्यतीति । ]

---

१. '०खाणं'—ए. २. '०वृत्तो०'--आ. ३. पदं नास्ति—ऊ, ए. ४. 'मायावि०'--ए. ५. 'उहहु०'—आ. ६. 'अ'—आ, पदं नास्ति—ऊ, ए. ७. 'जदो'—ऊ, ए. ८. 'ओण्णिद्धं'--ए. ९. 'दोव्वल्लं'—आ, ऊ. १०. '०हणीस०'—आ, ऊ, ए. ११. 'दीसइ.'--ऊ, ए. १२. इदं वाक्यं नास्ति--ऊ, ए. १३. 'अबरं'—आ. १४. '०निश्व०'—आ, ए.

(प्रविश्य) **सितपक्षः**—(स्वगतम्)

शबलीकृतमानसः प्रिया-
नवलीलाकलनादिवैकृतैः ।
अवलीढपराक्रमः परै-
र[1]बलीभावमयं समागतः ॥१६॥

तन्[2]मदुक्तमिदानीमपि स्वीकुर्वीत? स्वीकरोतु वा न स्वीकरोतु वा । आपत्[3]कालेऽनादृतेनापि हितैषिणा हितं श्रावणीय[4]ः स्वामी । (इत्युपसृत्य) देव!

आक्रान्तमेव बलिभिः सकलं पुरं ते
स्थानाद् द्विजाः प्रचलित[5]ा निजवृत्तिहीनाः ।
लेख[6]ा करस्य विषय[7]ाकरणस्य लुप्त[8]ा
गुप्ताः क्वचित्क्वचिदपि प्रचरन्ति पौराः ॥१७॥

तत् सुहृद्बलमवल[9]म्ब्य विपदमेतामुत्तरीतुं प्रभविष्यति देवः ।

**राजा**—कस्तादृशः सुहृद्यो मामुद्धरेत्? सुहृदेका प्राणप्रिया, सा च स्वभावादबला भीरुश्च । विशेषतश्चाद्य चिन्ताश[10]बला ।

**सितपक्षः**—नैक्षथाः सहचरं पुर[11]ःस्थितं
योगिनं बहुलपक्षसंभवे ।
चित्रमत्र सितपक्षचन्द्रिका-
चाकचिक्यवलनेऽपि नेक्षसे[12] ॥१८॥

---

१. '०रवली०'—आ, ऊ. २. 'तदु०'—ऊ. ३. '०त्काल अना०'—ए. ४. '०णीयं'—आ. ५. '०ताश्च निवृत्ति०'—ए. ६. '०खाक०'—ए. ७. '०याः कर०'—ऊ, ए. ८. '०प्ताः'—ए. ९. '०वलोक्य'—ऊ. १०. '०सब०'—आ. ११. '०रस्थि०'—अ, आ. १२. 'नेक्ष्यसे'—अ, आ.

सख्या[1] कारुणिकेन येन विभुना दत्तं पुरं प्रेयसा
सर्वार्थक्षम[2]मेतदत्र करणप्रौढिः प्रसादीकृता ।
तन्नामाप्यविजानतः परगुणव्यासङ्गमूढात्मनः
सेयं युज्यत एव ते परिणतिः, सौख्यं कृतघ्ने कुतः ? ॥१९॥

**राजा**—पुरदायिनी प्राणेश्वरी[3] मे वल्लभा । तथा[4]प्यहं परित्यक्तः । (आकाशे)[5] हा प्रिये ! परिष्वज[6]स्व माम् ।

**सितपक्षः**—अद्यापि स एवास्य व्यामोहः ।

तत्तद्दुर्जनसङ्गदूषितहृदे भूमीभुजे शोचते
नैतन्मद्वचनं सुधामृतरसप्रस्यन्द[7]नं रोचते ।
जिह्वा यस्य दृढं गता रसिकतामम्लेषु तिक्तेषु वा
न द्वित्रान् दिवसानसावतिरसां द्राक्षामपि श्लाघते[8] ॥२०॥

भक्ताय[9] नित्यं परिशीलिताय
द्रुह्यत्यकस्मादपि यो हिताय ।
नव्यं जनं कामयते[10]ऽतिवामं
त्याज्यः स रोगीव नृपो[11] निकामम् ॥२१॥

तदे[12]यमिदानीमसमाधेयो मया ।

गोस्वामिना केवल[13]मुद्यतासौ
मित्रेण गौः[14] कामदुहः[15] प्रचारैः ।

---

१. अतः प्राक् 'अपि च' इत्यधिकम्—ऊ. २. '०र्थे क्ष०'—आ. ३. 'मे प्राणेश्वरी'—ऊ. ४. '०याद्याहं'—आ. ५. पदं नास्ति—ऊ, ए. ६. '०ष्वज स्वामी'—आ. ७. '०स्यन्दिनं'—ऊ. ८. 'श्लाघते'—ए. ९. अतः प्राक् 'अपि च' इत्यधिकम्—ऊ. १०. '०ति नाम'—आ, '०तिकामं'—ए. ११. 'नरो'—ऊ. १२. इदं वाक्यं नास्ति—ऊ, ए. १३. 'प्राक् समुदेष्यतासौ'—ऊ, ए. १४. 'गोः'—आ, ऊ, ए. १५. '०दुंघः'—अ, '०दुघ०'—आ.

संकोचशीलो निर्जबन्धुपद्म[1]
आमोदनीयः प्रतिबोधनीयः ॥२२॥

([2]राजानं प्रति) स्वस्त्यस्तु ते[2]। (इति निष्क्रान्तः।)

(नेपथ्ये)

आः पुरञ्जन! क्व गच्छसि?

प्रज्वारो यस्य सहजो भगिनी कालकन्यका।
भयं[3] मां न विजानासि यवनेशमुपस्थितम्? ॥२३॥

[4](अन्यतो नेपथ्ये)

महाहवे विनिकृतास्त्वया ये वीरमानिनः।
प्रज्वारेण सहायान्ति ते त्वां प्रतिचिकीर्षवः ॥२४॥

**राजा**—(सचकितं दिशोऽवलोक्य[5]) [6]किं करोमि? क्व गच्छामि? सर्वतो[7] निरुद्धोऽस्मि[8] शत्रुभिः। (विचार्य[9]) स्वपदलाभाय पुरान्तरमन्वेषणीयम्[10]।

(इति निष्क्रान्ताः सर्वे।)

**पुरञ्जनपुरगञ्जनो[11] नाम**
**तृतीयोऽङ्कः ॥३॥**

१. 'निशि बन्धु०'—आ, ऊ, 'निशि बद्ध०'—ए. २. 'राजानं···ते' इत्यंशो नास्ति—ऊ, ए. ३. 'नाम'—आ. ४. 'अन्यतो···प्रतिचिकीर्षवः ॥' इत्यंशो नास्ति—ऊ, ए. ५. 'विलो०'—आ. ६. 'किं···शत्रुभिः।' इत्यस्य स्थाने 'आः! सर्वमाक्रान्तं शत्रुभिः।' इति—ऊ, ए. ७. पदं नास्ति—आ. ८. 'संनि०'—आ. ९. पदं नास्ति—ऊ, ए. १०. '०षयामि'—आ, ऊ, ए. ११. 'ञ्जनगञ्ज०'—ऊ, ए.

## चतुर्थोऽङ्कः ॥

(नेपथ्ये)

हित्वा स्वात्मपुरं पुरञ्जननृपोऽसङ्गे तुरङ्गे[1] स्थितः
सुद्युम्नो[2]ऽनुसरन्[3]मृगा[4]निह पुरो मायावनासेवनात् ।
स्त्रीभावेन विदर्भभूमिषु चरन् राजात्मजातं वरं
संप्रापन्मलयध्वजं बुधमहो दैवी विचित्रा गतिः ॥१॥

( ततः प्रविशत्यविज्ञातलक्षणः । )

**अविज्ञातलक्षणः**—प्रभोर्दयानिधानस्य सखा मम पुरञ्जनः ।
एतादृशीं दशां प्राप्तः कर्मणो गतिरीदृशी ॥२॥

साम्राज्यं स्वपदे विहाय विगतातङ्कोऽतिलौल्याच्चल-
न्नेषे[5] प्राप्तपुरस्थितिर्निगदितो राजेति राज्ञीति च ।
षड्वेदी[6] भवितुं गतस्य हि परं देशं चतुर्वेदिन-
स्तत्रत्यैर्विहितै[7]र्द्विवेदिपदवीमापादितस्योपमाम् ॥३॥

(सा[8]नुकम्पम्) यज्जातं तज्जातम् । स्थिते[9] गतिश्चिन्तनीयेत्यस्य स्वरूपलाभाय मयोपायो रचनीयः । यतो योग्यस्यो[10]परि सर्वो भारः ।

१. अत्र मूलपुस्तकस्था टिप्पणी 'मनोवासनारूपे' इति--आ. २. 'सद्यु०'--आ. ३. 'ऽन्वसर०'—ऊ. ४. अत्र मूलपुस्तकस्था टिप्पणी 'विषयान्' इति--आ. ५. '०न्दोषप्राप्त०'--आ, '०न्धत्ते नव्यपुर०'--ऊ, '०न्धव्याधव्यपुर०'—ए. ६. '०दीभवितुं'—ए. ७. '०र्वहति द्वि०'—आ, '०र्मनुजैर्द्वि०'—ऊ, ए. ८. पदं नास्ति—ऊ, ए. ९. 'स्थिते.....त्यस्य' इत्यस्य स्थाने 'अतः परमस्य' इति--ऊ, ए. १०. 'उपरि' इति पदं नास्ति--ऊ, ए.

अविज्ञातो योगी पुरि सममनेनापि विचरा-
म्यहो ज्ञातः सख्या न मम परमः कोऽपि महिमा ।
इदानीं गोपुच्छग्रहणकलया दुस्तरतरां
स्रवन्तीं[1] संतीर्या[2]कलयतु स यावानहमिति ॥४॥

तत्[3] कलिराजगृहे निरुद्धाया नवलक्षणायाः कामधेनोः स्वच्छन्द-प्रचाराय नियुक्तो विलक्षणः कथं चिरयति ?

(प्रविश्य) **विलक्षणः**[4]—देव ! एष ते चिरकिङ्करो विलक्षणः प्रणमति ।

**अविज्ञातलक्षणः**—वत्स ! अभिलषितसिद्धिमाप्नुहि । अपि मोचिता नवलक्षणा ?

**विलक्षणः**—अथ[5] किम् ।

**अविज्ञातलक्षणः**—कथम् ?

**विलक्षणः**—स्वामिन् ! सभायामासीनं सपरिवारं कलिराज-मासाद्य तदुत्तेजनाय मया[6] सत्ययुगमहिमा[7] वर्णयितुमुपक्रान्तः ।

**अविज्ञातलक्षणः**—ततस्ततः ?

**विलक्षणः**—ततस्तेन किञ्चिद्विहस्य[8]—

"स्वामी येन स नाम[9] वामनपदं प्राप्य वैरोचनि-
द्वारे तामनुभावितोऽतिविषमां संप्रार्थनादुर्दशाम् ।

१. 'स्त्रव०'—ए. २. अत्र 'र्या' इति वर्णानधिगमे स्थानं रिक्तं विहितम्—ऊ. ३. पदं नास्ति—ऊ, ए. ४. अत्र मूलपुस्तकस्था टिप्पणी 'वदतीति शेषः' इति—अ, आ. ५. अत्र मूलपुस्तकस्था टिप्पणी 'स्वीकारे' इति—अ, आ. ६. पदं नास्ति—ए. ७. '०महिमानं'—ए. ८. अत्र मूलपुस्तकस्था टिप्पणी "'इति भणितम्' इत्यनेनान्वयः" इति—आ. ९. 'सनामवामन०'—ए; अत्र मूलपुस्तकस्था टिप्पणी 'संभावनायाम्' इति—अ, आ.

बह्वायैस्य[1] बहून्यहानि तपसः सिद्धिश्च यस्मिन्नृणां
सत्यं सत्यमिति ब्रवीषि तमहो[2] पुण्यैर्यशो[3] लभ्यते ॥५॥

अथ वा, अपारमार्थिकदृष्टिरेवायं[4] जनः ।

अन्तर्हन्त पदं निधाय पशुनाप्याक्रान्तमिन्दोरसौ
क्षीणो येन विवर्धितो[5] न सहते मित्रस्य तस्योदयम् ।
दूरोदञ्चितचन्द्रिकाचयचमत्कारप्रसक्तात्मना
लोकेनास्य मुधा कलानिधिरिति व्यक्ताभिधा[6] स्वीकृता ॥६॥

बाल्ये रासविलासलालसलसद्गोपालिकालालित-
स्तारुण्ये पुरि राजराजपदभाग्भूपालकन्यावृतः[7] ।
स्निग्धश्यामलपद्मदामसुभगः[8] शृङ्गारमूर्तिः प्रभुः
सर्वेषां हृदयङ्गमः स्ववपुषाविर्भूय मय्याबभौ ॥७॥

अपि च

अहो ! अहोभिर्बहुभिर्यदाप्यते
समाधियज्ञार्चनकर्मभिः फलम् ।
अवाप्यते तन्मयि सर्वमानवै-
र्मुकुन्दनामक्षणमात्रकीर्तनात् ॥८॥

सोऽहं कलिः कलिरित्यभिधेये[9] तस्यै[10] सत्यं सत्यमिति प्रतिष्ठा दीयते ! अस्ति चास्मद्गृहे नवलक्षणा नाम[11] कापि कामगवी यस्याः

---

१. '०यास्य '--ऊ; अत्र मूलपुस्तकस्था टिप्पणी 'यत्नं कृत्वा ' इति--आ. २. 'तदहो '--ए. ३. 'भाग्यै० '--आ, ऊ, ए. ४. 'अपर० '--ऊ. ५. '०वर्धते '--ए. ६. '०भिदा '--ऊ. ७. '०रतः '--आ. ८. 'स्निग्धः '--आ. ९. '०भिधीये '--ऊ, ए. १०. अत उत्तरं 'च ' इत्यधिकम्--ऊ, ए. ११. अत उत्तरं 'गोस्वामिप्रसादीकृता ' इत्यधिकम्--ऊ, ए.

कामपि कलां कोऽपि कुत्रापि कदापि न लब्धुमर्हति।" इति भणितम्।

**अविज्ञातलक्षणः**—अहो वचनोपन्यासचातुरी!

[1]रक्ताक्षो मलिनः पिको मधुरया वाचा परं श्लाघ्यते
ऽमेध्याशी कटुभाषणोऽपि [2]शकुनाख्यानेन काकोऽर्च्यते।
[3]सुश्लाघ्यो नवलक्षणाप्रणयनादत्यन्तदुष्टो ऽप्यसा-
वेकः को ऽपि गुणो विलक्षणतरः स्यात्सर्वदोषापहः॥९॥

ततस्ततः?

**विलक्षणः**—ततो मयोक्तम्—यद्येवं तत् किमिति सा न प्रकाश्यते? कथमननुभूय गु[4]णमगुणं वा जानाति जनता?

**अविज्ञातलक्षणः**—साधु! साधु! ततस्ततः?

**विलक्षणः**—ततस्तेन दुर्यशोमलिनमात्मानमुज्ज्वलयिष्यता "देव! नेयं मोक्तव्या, शितशृङ्गतया सर्वानस्मान् भवन्तं चाप्यभिभविष्यति।" इति स्वानुचरैर्निवार्यमाणेनापि प्राणेभ्योऽपि प्रतिष्ठा गरिष्ठेति सवत्सा सा मोचिता, निवेदिता च—

कलिः साधुः साधुः कलिरिति कलिन्दाद्रितनया-
जले मज्जन् व्यासो मुनिरभिद[5]धे सज्जनमुदे।
तदेतत् प्रत्येतु त्रिजगदिदमत्ये[6]तु विपदं
त्वदायत्ता एते मम किल गुणाः कामधुगये!॥१०॥

इति। ततः सा त्वरिततरं प्रचलिता, अनुग्राह्यलोकाननुगृह्य स्वामि[7]पादान्द्रष्टुमेष्यतीति।

१. इदं पद्यं नास्ति—ए. २. 'सुकृताख्या०'—ऊ. ३. '०घ्या०'—आ. ४. 'गुणमुड्डाणं'—आ. ५. '०नातु'—ऊ, ए. ६. '०मप्येतु'—ए. ७. '०पदान्'—ए.

**अविज्ञातलक्षणः**—(सहर्षम्) अतः परं पुरञ्जनप्रतिकारः[1] करस्थ एव । (विलक्षणं प्रति) स्वं कार्यं साधयतु भवान् ।

(विलक्षणः प्रणम्य निष्क्रान्तः ।)

**अविज्ञातलक्षणः**—एतत्कुर्वता मया बहु साधितम् । यथा[2]–

पद्मान्प्रबोधयितुमम्बुजबन्धुना स्वां
भासं प्रसार्य तिमिरप्रसरोऽभ्यवारि[3] ।
आशाप्रसाधनमकारि चिराय कोक-
लोकस्य शोक उदधारितमां मनस्तः ॥११॥

(ततः प्रविशति नवलक्षणा ।)

**नवलक्षणा**—एष स्वामी मामेव प्रतीक्षते[4] । अस्ति चास्य[5] सर्वापेक्षया मयि[6] गुरुतरः पक्षपातः । (सश्लाघम्[7])—

स्वतः सत्प्रामाण्ये भगवति चिदानन्दसदने
कृपापारावारे विमतिमिह के वा विदधति ।
तथाप्येतन्मायापिहितनयनानां जडधियां
भवन्ति भ्रान्तानां स्वपरपरिमोहा विमतयः[8] ॥१२॥

( उपसृत्य प्रणमति । )

**अविज्ञातलक्षणः**—( सानन्दमङ्गानि परिमृज्य ) भद्रे ! स्वागतम् । इहास्यताम् ।

( नवलक्षणा प्रसादमभिनन्द्योपविशति । )

१. '०प्रती०'—ऊ. २. पदं नास्ति—ए. ३. 'न्यवारि'—ऊ, ए. ४. '०क्ष्य०'—आ. ५. 'च सर्वा०'—ऊ, ए. ६. 'मय्यस्य'—ऊ, ए. ७. पदं नास्ति—ऊ, ए. ८. 'विनतयः'—ऊ.

**अविज्ञातलक्षणः**--संक्षेपतस्तावत्त्ववृत्तं कथयतु[1] भवती[2]।

**नवलक्षणा**--स्वामिप्रसादात्कलिनिर्मुक्तया—

श्रीरङ्गनाथस्थितिमङ्गलं तं
　कर्णाटमासाद्य मयान्वभावि ।
दिने दिने वृद्धिरनुक्रमेण
　विशुद्धपक्षं कलयेव चान्द्र्या[3] ।।१३।।

**अविज्ञातलक्षणः**—ततस्ततः ?

[4]**नवलक्षणा**—ततो भूयोवृद्धिकाम्यया गुर्जरदेश[5]मह[6]मागता ।

**अविज्ञातलक्षणः**—अथ तत्रत्यै[7]र्विवर्धिता भवती ?

**नवलक्षणा**—वृद्धिर्दूरे तिष्ठतु। ते च “स्वयमेव वयं गोमिनः[8], किमनया परकीयया परसस्य[9]चारिण्या गवा प्रयोजनम् ?” इति निरुद्धप्रसरतया सपुत्रां मां जीर्णतामनयन्त ।

**अविज्ञातलक्षणः**--अहो मूर्खता गुर्जराणाम्[10] ।

यत्र ब्रह्मप्रतिष्ठा व्यरचि गुणविदा यत्र लक्ष्म्या निवासो
　विष्णोर्यत्र प्रसादः स्वकरधरणतो यत्र मित्रानुरागः ।
तत्पद्मं पुष्पमन्यान्यपि कुमुदमुखान्येव पुष्पाणि सेयं
　गौरेवान्याश्च गावो जगति बहुविधा एवमज्ञस्य बुद्धिः ।।१४।।

ततस्ततः ?

१. ‘कथय’—ऊ, ए. २. पदं नास्ति—ऊ, ए. ३. ‘चान्द्रया’ —ए. ४. पदं नास्ति—ऊ. ५. ‘मालवदेश०’—ए. ६. ‘अहम्’ इति पदं नास्ति—ऊ, ए. ७ ‘०त्यैर्वर्धि०’—ऊ. ८. ‘गोस्वामिनः’ —आ. ९. ‘०शस्य०’—ऊ, ए. १०. ‘मालवानाम्’—ए.

**नवलक्षणा**—ततो यत्र न संमानं[1] न च बन्धुमित्र[2]विशिष्टशिष्टसंनिधानं तत्र देशे न वस्तव्यमिति विचार्य[3] प्रातिष्ठे ।

**अविज्ञातलक्षणः**—ततस्ततः ?

**नवलक्षणा**—ततः कुत्रचित्केनचिदादृता[4], कुत्रचित्[5]केनचिदपमानिता, कुत्रचित्केनचित्

"आगते स्वागतं कुर्याद् गच्छन्तं न निवारयेत् ।"

इति रीतिमवलम्ब्य संभाविता, कुत्रापि चित्तप्रसादमलभमाना—

समाहूतब्रह्मश्रियमिव समन्तान्मदकल-
द्विजानामालापैस्तपनतनयावीचिनिनदैः ।
लताकुञ्जे[6] भ्राम्यन्मुखरमधुपश्रेणिरणितै-
रुपागां[7] गोपाल[8]प्रियवसतिवृन्दावन[9]भुवम् ।।१५।।

प्रत्युप्तामलपद्मरागशकले गारुत्मतैः कोमलैः
संदृब्धे[10] नवकेलिपञ्जर इव श्रीभाजि वंशीवटे ।
स्निग्धः[11] स्निग्धहरिद्द[12]लालिललिते चञ्चत्फले सुस्थितो
यत्र व्यञ्जयति स्वरूपममृतं वाचा किरन्त्या शुकः ।।१६।।

किं बहुना ?—

ध्यायन्तः कृष्णमन्तर्मुकुलितकुसुमप्रेक्षणं सन्मरन्द-
स्पन्दानन्दाश्रुधारा[13] इह धरणिरुहोऽपि स्फुरत्पल्लवौष्ठाः ।

१. 'संमाननं'—आ. २. '०मित्रशिविशिष्ट०'—ऊ, '०मित्रशिष्टविशिष्ट०'—ए. ३. 'विचार्य'—आ. ४. '०दावृत्ता'—ए. ५. 'कुत्रचित्केनचिदपमानिता' इति वाक्यभागो नास्ति—आ. ६. '०कुञ्जभ्रा०'—ऊ, ए. ७. '०पाङ्गां'—ए. ८. 'गोपानां प्रिय०'—ऊ. ९. '०नभूवम्'—ए. १०. 'संदब्धे'—आ. ११. 'स्निग्धस्नि०'—आ, ऊ, ए. १२. '०हरिद्रलालि०'—ए. १३. '०धारामिह'—ए.

स्वैरं व्यालोलयन्तः कुसुमदलकरे[1] भृङ्गपद्माक्षमालां
श्रीभर्तुर्नाममालामिव विहगतरुच्छद्म[2]नामी जपन्ति ॥१७॥

**अविज्ञातलक्षणः**—ततस्ततः ?

**नवलक्षणा**—ततस्तत्र गोपालसाह[3]चर्याद् गोपरिचर्याधुर्याभिर्बालवृद्धवनिताभिरपि परमप्रेम्णा संभाविता हृष्टपुष्टसकलावयवा तरुणी संवृत्तास्मि ।

**अविज्ञातलक्षणः**—वसुन्धरा[4]यां रत्नगर्भा[5]भिधाननिदानं हि [6]स्थलं तत् । [7]ततस्ततः ?

**नवलक्षणा**—ततश्च[8]लिता मार्गे [9]तपनातपतापविकलावकालपलितशिथिलितसर्वाङ्गसंधी मूर्छितप्रायौ सुरोच[10]नविरोचनाववलोक्य शोचन्ती केनापि कृपालुना सादर[11]मभिहिता "भद्रे ! कुत्रत्यासि ? किमर्थमुद्विग्नासि ?" [12]इति । ततो मयोक्तम्—

"द्रविड[13]जनपदेऽहं सन्मुदे हन्त देहं
समधिगतवतीमं यत्र सा ताम्रपर्णी ।

---

१. 'कुसुमकरतले'—ऊ. ए. २. '०च्छद्मना मां जपन्ती'—अ. ३. '०सालचर्या०'—अ, '०सालचया०'—आ. ४. '०राया'—ऊ, ए. ५. '०गर्भाभिधा०'—ए. ६. 'तत् स्थलं ततः'—ए. ७. अतः प्राक् 'तद्गुणजटितो वृन्दावनमपहाय नाहं पदमपि गन्तुं प्रभवामि ।' इत्यधिकम्—ऊ, ए. ८. पदं नास्ति—ऊ, ए. ९. 'तपतपनातपतापवि०'—आ, 'तपनातपवि०'—ऊ, ए. १०. '०चनपुरो०'—ए. ११. '०महमभि०'—आ. १२. पदं नास्ति—ऊ, ए. १३. 'द्रविलजन०'—ऊ, ए.

यदमृतचरशुक्तिश्रेणयो मौक्तिकं त—
तत्फलमभिलषणीयं स्पष्टमुद्भावयन्ति ॥१८॥[1]

साहं स्वामिना कस्मैचित्[2]प्रयोजनाय समाहूता पुत्रयोरनयोरिमामवस्थां[3]मवलोक्योद्विग्नास्मि ।" इति ।

**अविज्ञातलक्षणः**—ततस्ततः ?

**नवलक्षणा**—ततस्तेन "वैद्योऽस्मि, इमावुपचरामि ।" इति प्रतिज्ञाय कृष्णगवीक्षीरधारया विशेषेण सिक्तावपि तौ न चेतितौ । ततः स[4]चकितमिव देशकालनियतत्वादस्योप[5]क्रमस्य नेदानीमिह[6] प्रसर इति विचार्य सुश्रुतचरकपुराणमुनिप्रणीतसारामृतनामरसायनप्रयोगेण सप्ताहमात्रादेव तेन तौ पूर्ववत्कृतौ सत्कृतौ च । ममापि परिभ्रमण-श्र[7]मवैकल्यमपनीतमिति चरितार्था स्वामिपाद[8]मूलमागतास्मि । तदाज्ञाप-यतु स्वामी, कि[9]मर्थमयमाहूतो दासीजनः ?

(अविज्ञातलक्षणः कर्णे कथयित्वा निष्क्रान्तः ।)

१. अत उत्तरं—

"तत्तद्वस्तुषु नेति नेति वचनेनावस्तुसत्सुभ्रम-
व्यासङ्गं व्यवधूय नैगमगणैरद्यापि योऽन्विष्यते ।
यत्स्पर्शेन सुवर्णतामुपगताहल्या तथा पूतना
पादस्पर्शमणिः स सर्वसुलभो यत्रास्ति शेषाचले ॥"

इति पद्यमीषत्पाठभेदेनाग्रे ५·५ निर्देशेन वर्तिष्यमाणमत्रापि पठितम्—ऊ, ए. २. पदद्वयं नास्ति—ऊ, ए. ३. '०स्थामालो०'—ऊ. ४. 'स चकित०'—ए. ५. '०पचारस्य'—ऊ, ए. ६. 'इह' इति पदं नास्ति—ऊ, ए. ७. '०श्रमोऽपनीत इति'—ए. ८. '०पद०'—आ. ९. एतदादिर्वाक्यभागो नास्ति—ऊ, ए.

**नवलक्षणा**—(परिक्रम्य दृष्ट्वा) एषा मलयध्वजरमणी दुरुत्तर[1]तरङ्गिणीपरपारे विवर्तमानं भर्तारमपश्यन्ती चक्रवाकीव व्याकुलागस्त्य[2]महर्षिपत्न्या[3] [4]अमितलक्षणाभिधया सुतया समनुरुध्यमाना शोचति । [5]प्रथमत एव मया नियुक्तो[6] विरोचन इमामवलम्ब्य तिष्ठति, इत्यवसरं प्रतिपालयामि । ( इत्येकान्ते स्थिता । )

(ततः प्रविशति वैदर्भीरूपेण पुरञ्जनः[7], अमितलक्षणा च ।)

**वैदर्भी**—हा पिअ ! हा[8] मणोरम[9]सील ! [10]परिहासपेशलदाए [11]मं परिहरीअ[12] कहिं लुक्को चिट्ठसि ? ( इति रोदिति । )

[ हा प्रिय ! हा मनोरम[13]शील ! परिहासपेशलतया मां परिहृत्य कुत्र गुप्तस्तिष्ठसि ? ]

**अमितलक्षणा**—अम्ब ! किं रोदिषि ? संपूर्णनगर[14]स्वामिन्यसि ।

**वैदर्भी**—एक्केण देण[15] दइएण[16] विणा समत्थं[17]
पुण्णं पि भादि णअरं[18] मह सुण्णसुण्णं ।

---

१. '०त्तरपरपारे'—ऊ. २. '०गस्तिम०'—ए. ३. '०पत्न्या-मित०'—ऊ. ४. अत्र मूलपुस्तकस्था टिप्पणी 'कृष्णसेवारुच्या' इति—अ. ५. 'प्रथमत...तिष्ठतीति' इत्यस्य स्थाने केवलं 'भवतु' इति—ऊ, ए. ६. 'नियुक्ता'—अ. ७. '०ञ्जनी'—अ. ८. पदं नास्ति—ए. ९. '०रमशील'—अ, '०रमणशील'—आ. १०. पदं नास्ति—ऊ, ए. ११. 'कहिं मं परिहरिअ विहरसि ?'—ऊ, ए. १२. '०रीअं'—अ. १३. '०रमणशील'—आ. १४. '०नर०'—आ. १५. 'तेण'—ऊ. १६. 'दयिएण'—ए. १७. 'समुत्थं'—ऊ. १८. 'णारं'—आ.

णक्खत्त[1]चंद[2]भरिदं पि सहस्सरस्सि—
हीणं णिसासु गअणं विअ[3] पम्मिणीए[4] ॥१९॥

[ एकेन तेन दयितेन विना समस्तं
पूर्णमपि भाति नगरं मम शून्यशून्यम् ।
नक्षत्रचन्द्रभरितमपि सहस्ररश्मि-
हीनं निशासु गगनमिव पद्मिन्याः ॥ ]

**अमितलक्षणा**—यत्र कुत्रापि प्रियोऽन्विष्यताम् ।

**वैदर्भी**—( इतस्ततः परिक्रम्य सनिःश्वासम् ) इदो लदाणिउंजेसुं[5] तदो[6] लदाणिउंजेसुं[7] सदसो अण्णेसिदो वि पिओ[8] ण लक्खीअदि । पुच्छिदो[9] वि लोओ ण[10] कहेदि कहिं[11] गओ[12] पिओ[13] त्ति ।

[ इतो लता[14]निकुञ्जेषु ततो लता[15]निकुञ्जेषु शतशोऽन्वेषितोऽपि प्रियो न लक्ष्यते । पृष्टोऽपि लोको न कथयति कुत्र गतः प्रिय इति । ]

१. ' णक्कत्त० '—अ, आ. २. ' ०चंदचरिदं '—ऊ. ३. ' मिव ' —आ, ऊ, ए. ४. ' पोम्मि० '—आ, ऊ, ए. ५. ' लदापुजेसुव '—ए. ६. पदं नास्ति—आ. ७. पदं नास्ति—आ; ' लदाकुंजेसु '—ऊ, ए. ८. पदं नास्ति—ऊ, ए. ९. ' पुछिदो '—आ. १०. ' न '—ए. ११. ' गदो '—ऊ, ए. १२. इदं पदं ' कहिं ' इति पदात्प्रागेव पठितम् —ऊ, ए. १३. अत उत्तरं ' दाणि ज्जेव वणविहारणिमित्तं पमदवणं आअदो परिहासपेसलदाए लुक्को चिट्ठदि त्ति । ' इति वाक्यम्—ऊ, ए, तस्य संस्कृतच्छाया च ' इदानीमेव वनविहारनिमित्तं प्रमदवनमागतः परिहासपेशलतया लुक्कायितस्तिष्ठति । '—ए. १४. ' लतापुञ्जे० '—ए. १५. ' लताकु० '—ए.

**अमितलक्षणा**--अम्ब ! धीरा भव, प्रियदर्शनं भविष्यति ।

**वैदर्भी**—(वारंवारमन्विष्य) वच्छे ! पज्जालेहि चिदं जहिं पि[1]आसंदंसणलहुअं सरीरं आहुदीकरिस्सं ।

[वत्से ! प्रज्वालय चितां यत्र प्रियासंदर्शनलघुकं शरीरमाहुतीकरिष्ये ।]

**अमितलक्षणा**--[2]किमेवं त्वरसे ?

**वैदर्भी**--एसा चिदं ण[3] करेदि ता सअं जे[4]व्व वि[5]रएमि त्ति ।

(चितां रचयति ।)

[एषा चितां न करोति तत् स्वयमेव विरचयामीति ।]

**अमितलक्षणा**--( उच्चैःशब्दम् ) आर्याः ! परित्रायध्वं, परित्रायध्वम् ।

(नवलक्षणा उपसृत्य वारयति ।)

**वैदर्भी**--णं मुंचेहि मुंचेहि । माए ! कासि तुमं ?

[ननु मुञ्च मुञ्च । मातः ! कासि त्वम् ?]

**नवलक्षणा**--अहं कापि भवामि, प्रियं ते दर्शयिष्यामि ।

**वैदर्भी**--( [6]सहर्षम् ) कहिं मे पिओ ?

[कुत्र मे प्रियः ?]

**नवलक्षणा**--पारेतरङ्गिणि प्रियस्तव वर्तते ।

---

१. पदं नास्ति—ऊ, ए. २. अस्य वाक्यस्य स्थाने 'भूयोऽन्वेषय ।' इति वाक्यान्तरम्—ऊ, ए. ३. 'न'—ए. ४. 'जेअ'—आ, 'ज्जेअ'—ऊ, ए. ५. अतः प्राक् 'चिदं' इति—ऊ, 'चिअं' इति—ए. ६. पदं नास्ति—ऊ, ए. ७. '०णी'—ए.

**वैदर्भी**—कहं[1] एदाए तुंगतरंगभीसणाए[2] पारं जामि[3] ?

[ कथमेतस्यास्तुङ्गतरङ्गभीषणायाः पारं यामि ? ]

**नवलक्षणा**—मत्पुच्छमवलम्ब्य सुखेन तरिष्यसि[4] ।

उडुप[5]प्रसरो नात्र तरणिप्रसरो न वा[6] ।
मत्पुच्छग्रहणेनैव तरन्तीमां तरङ्गिणीम् ॥२०॥

अपि[7] च[7]

लभ्यं वास्तव[8]मस्ति वस्तु परमं पारेऽन्तरा दुस्तरा
भीमेयं तटिनी तरङ्गविषमावर्तभ्रमा[9] वर्तते ।
संताराधिकृतेन सौम्यमनसा गोस्वामिना मे तथा
शिक्षादायि[10] यथा भयं न तरतां नोत्तारयन्त्याः श्रमः ॥२१॥

**अमितलक्षणा**—यथा कथयत्य[11]कारणबन्धु[12]रेषा तथा कुरु ।

( इति निष्क्रान्ताः सर्वे । )

**पुरञ्जनसमञ्जनो[13] नाम**

**चतुर्थोऽङ्कः ॥४॥**

१. 'कहिं'—ऊ. २. 'तुरंगभी०'—आ; पदं नास्ति—ऊ, ए.
३. 'यामि'—ऊ, ए. ४. 'संतरि०'—आ, ऊ, ए. ५. 'उडप०'—ए.
६. 'च'—आ. ७. पदद्वयं नास्ति—ऊ, ए. ८. 'बास्तव०'—ए.
९. '०श्रमा'—आ. १० 'शिक्षा दायि'—ए. ११. 'व्यते'—आ.
१२. 'अकारणबन्धुः' इति पदं नास्ति—ऊ, ए. १३. '०नमञ्ज०'—ऊ.

# पञ्चमोऽङ्कः[1]

( ततः प्रविशति वैदर्भी नवलक्ष्मणा च । )

**वैदर्भी**--( सहर्षाश्चर्यम्[2] ) आर्ये ! तव प्रसादात्-

अनायासादभ्रंलिहलहरिसंपातरहितं
गतोदग्रग्राहग्रहपरिभवं संप्रति मया ।
समुत्तीर्णा [3]भूमिभ्रमिभरविवर्तव्यतिकर-
च्युताशङ्कं कूलङ्कषसरिदियं गोष्पद[4]मिव ॥१॥

**नवलक्ष्मणा**--

[5]जगति जयति शक्तिस्तस्य गोस्वामिनः[6] सा
प्रथिततम[7]महिम्नः शश्वदाश्चर्यधाम्नः ।
चलयति किल लोहं निश्चलं चुम्बकाश्मा[8]
द्रवयति शशिकान्तं यामिनीकान्त एकः[9] ॥२॥

**वैदर्भी**--तमहमीक्षितुमिच्छामि, तद्दर्शनेन प्रियदर्शनं भविष्यति[10]

१. अ पुस्तकेऽयं चरमोऽङ्को भिन्नहस्ताक्षरेण किञ्चिन्न्यूनाकारेषु पत्रेषु लिखितो दृश्यते. २. 'सविस्मयम्'—ऊ, ए. ३. 'भूमिम्भरवर-विवर्तव्यतिकरं गताशङ्कं'—आ, 'भूरिभ्रमिभरविवर्तव्यतिकरान्निरातङ्कं' —ऊ, 'भूरिभ्रमिपरिविवर्तव्यतिकरान्निरातङ्कं'—ए. ४. 'गोः पद०' —ऊ. ५. 'जयति जगति'—ऊ. ६. 'गोपालमूर्तेः'—ऊ, ए. ७. '०तरमहि०'—ऊ. ८. '०श्म'—आ. ९. 'एव'—ऊ, ए. १०. अत उत्तरं "**नवलक्ष्मणा**—सेयं गोस्वामिनः परमा शक्तिः। **वैदर्भी**—आर्ये! तं द्रष्टुमिच्छामि। **नवलक्ष्मणा**—इदानीमेव द्रक्ष्यसि। **वैदर्भी**—तत्र त्वरते मे चेतोवृत्तिः।" इत्यधिकम्—ऊ.

**नवलक्षणा**—[1]उचितमेवमाह भवती ।

उपकारी निरु[2]पधिप्रियः सहचरः स ते ।

**वैदर्भी**—विदर्भजन्मनो नाथं पाण्डयनाथं विदुर्मम ॥३॥

**नवलक्षणा**—एतमर्थं [3]स एव [3]स्फोरयिष्यति । सुरोचनाञ्जन-समुन्मीलितदृष्टिः [4]स्वयं चाक[5]लयिष्यसि । शतमप्यन्धानां न पश्यति ।

**वैदर्भी**—([6]सोत्कण्ठम्) सकलेष्वपि वस्तुषु स्पृहा-

मपहायोपनतेष्वयत्नतः ।

मम तत् प्रियवस्तु वस्तुतः

श्रुतमात्रं [8]हृदयं दिदृक्षते ॥४॥

[9]तदादेशय पन्थानम् ।

**नवलक्षणा**—नन्वहमेव पन्थाः । सर्वनिरपेक्षस्य तस्य मदेक-[10]सव्यपेक्षा [11]वर्तते । तदेहि, शेषशैलशिखरे तमवलोकयिष्यसि ।

(इत्युभे परिक्रामतः ।)

**नवलक्षणा**—[12]एष [13]पुरतो [14]ऽशेषसुरासुरमुनिमनुजगीतविशेष-पुण्यमहिमा शेषनामा [15]धरणिधरः,—

१. 'उचितमेतत्'-ऊ, ए. २. '०रुपाधि०'—आ. ३. पदत्रयं नास्ति—ऊ, ए. ऊ पुस्तकेऽत्र ग्रन्थहानिदर्शकं किञ्चित् स्थानरिक्तत्वं दृश्यते. ४. 'स्वं'—ए. ५. '०कलिष्यसि'—ए. ६. इदं पदं नास्ति—ऊ, ए. ७. इदं पद्यं नास्ति—ऊ, ए. ८. '०दये'—आ. ९. 'पन्थानमादेशय—ए. १०. '०पेक्षता ।'—ऊ, 'मय्येव सव्यपेक्षता ।'—ए. ११. पदं नास्ति—ऊ. ए. १२. अतः प्राग् 'दृष्ट्वा' इति—ऊ, ए. १३. पदं नास्ति—ऊ, ए. १४. 'निःशेष०'—ऊ, ए. १५. 'धरिधरः'—ए.

तत्तद्वस्तुषु नेति नेति वचनेनावस्तुसत्सुभ्रम-
व्यासङ्गं व्यवधूय नैगमगणैरद्यापि योऽन्विष्यते ।
[१]यत्स्पर्शेन सुवर्णतामुपगताहल्या तथा पूतना
पादस्पर्शमणिः स सर्वसुल[२]भो यत्र स्वयं भासते ॥५॥

(उभे [३]उपसर्पतः ।)

**वैदर्भी**--(स[४]प्रेमोद्रोमाञ्चगद्गदम्)

हे गोविन्द ! पदारविन्दविगलन्मदाकिनीवारये
किं पाद्यं प्रतिपादयामि ? कुसुमं किं पद्महस्ताय ते ? ।
वृन्दारण्यच[५]र ! त्वदङ्घ्रियुगपत्संवाहनव्याकुल-
श्रीसाहित्यकरीं[६] मया निजमनोवृत्तिं गृहाणार्पिताम् ॥६॥

अपि च

आरोप्य प्रणयोदयेन हृदये लक्ष्मीमतिप्रेयसीं
पत्संवाहनकर्मणि श्रमयितुं हे नाथ ! नैवार्हसि ।
लोला मामकचित्तवृत्तिरिह तु व्यापा[७]र्यतामर्पिता
स्थैर्यं ह्येति चलो[८]ऽपि तेऽङ्घ्रिभजने श्रीरेव तत्साक्ष्यदा ॥७॥

प्रलयपयोधिजलेऽपि न सीदति निगमतरिस्त्वयि सक्ता ।
भवजलधौ पतितोऽपि न मज्जति किमपि भवद्गुणवक्ता ॥

---

१. तृतीयश्चरणः समग्र एव नास्ति, पद्यं च त्रिपादमेव मुद्रितम्—ए.
२. '०लभः संभाति यत्र स्वयम्'—ऊ, ए. ३. अतः प्राग् 'देवम्' इत्यधिकम्— ऊ, ए. ४. '०प्रमाद०'—अ. ५. '०चरस्त्व०'—ए.
६. '०करीमयोनिज ! मनो०'—अ. ७. 'व्यापार्जिता चार्पिता'—ए.
८. 'चलापि'—ए.

जय जय मीनशरीर मुरारे ।
मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥८॥

गीतार्थेन श्लोकः

[१]श्रीशेषाचलरत्न ! कल्पितमहामीनावतारस्य ते
लग्ना [२]शूकशिखोपरि श्रुतितरिः कल्पान्तपाथोनिधौ ।
नामाङ्क्षीदिति किं [३]नु चित्रमिह ते नाम्नापि कण्ठस्पृशा
संसाराम्बुनिधौ [४]वलन्नघभराक्रान्तोऽपि [५]नो मज्जति ॥९॥

नगभरभुजगविनिःश्वसिताकुलमवनितलं सुगरिष्ठे ।
कलितमुकुर इव तिष्ठति सु[६]स्थिरमाकलितं तव पृष्ठे ॥
जय जय कच्छपरूप मुरारे ।
मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥१०॥

[७]गीतार्थेन श्लोकः

नाधो गच्छति शैलभारभरतो नोर्ध्वं भुजङ्गेश्वर-
श्वासौघेन निरी[८]क्ष्यमाणमुकुराकारं [९]स्थिरं तिष्ठति ।
भूचक्रं तव कूर्मराजवपुषः पृष्ठैकनिष्ठं हरे !
न क्वापि स्खलि[१०]ता भवन्ति भुवने नाथ त्वदालम्बिनः ॥११॥

[११]प्रथयसि धरणिस[१२]मुद्धरणे रिपुदलने ऽपि च सौकर्यम् ।
श्रुतिरपि तव गुणगणगणनामनु भजते ननु मौखर्यम् ॥

---

१. 'लक्ष्मीवल्लभदेव ! क०'—ऊ, ए. २. 'शुक०'—ए. ३. 'न'—ऊ, ए. ४. 'बल०'—अ. ५. 'ना'—ऊ. ६. '० स्थितमा०'—ऊ. ७. 'एतदर्थेन'—ऊ, ए. ८. '०रीक्षमा०'—अ, आ. ९. '०कारस्थिरं'—ऊ. १०. '०लितं'—ए. ११. 'प्राप्यसि' —आ. १२. 'समुद्ररणे'—अ, आ.

जय जय शूकर[1]रूप मुरारे ।

मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥१२॥

गीतार्थेन श्लोकः

सौकर्येण समुद्धृता[2] वसुमती मग्ना महाम्भोनिधौ

त्रैलोक्यप्रजयी हिरण्यनयनो दैत्यो रणे सूदितः ।

नित्यानन्तगुणस्य तेऽखिलगुणं वक्तुं न शक्ता श्रुति-

र्यत्किञ्चिद् गृणती प्रतिष्ठितिम[3]गादन्धेषु काणो यथा ॥१३॥

द्विषदसवो बत पञ्च वयं च दशेति ह्रियेव[4] दधन्ते ।

मुखमवकुञ्चित[5]मञ्चितपाणियुगे नखरा निभृतं ते ॥

जय जय नरहरि[6]रूप मुरारे ।

मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥१४॥

गीतार्थेन श्लोकः

प्राणाः पञ्च परं हिरण्यकशिपोरेते वयं चात्तदद्[7]-

द्वैगुण्यास्त्रर्त[8]येति कुञ्चिषमुखान् बिभ्रत्कठोरान्नखान् ।

ज्वालाजालजटाललो[9]चनमपि स्वीकृत्य सैंहं वपुः

प्र[10]ह्लादोदय एव देव ! भवतां[11] तेने स्वभावः स ते ॥१५॥

१. 'सूकर०'—आ, ए. २. '०मुद्धता'—अ. ३. '०ष्ठितम०' —ऊ ४. 'ह्रियैव'—ए. ५. '०कुञ्चितपाणि०'—ए. ६. 'नररूप'—ऊ. ७. '०तद्वैगु०'—आ, ऊ. ८. '०पयन्ति'—आ. ९. '०लौचन०'—अ. १०. प्रह्लादो०'—आ, ऊ, ए. ११. 'भवतो' (?)—ऊ.

न्यधित करे बलिरम्बु ममोचितमस्य मयापि च देयम्।[1]
इति भवता पदमर्पितमस्य शिरस्यमरैरवधेयम् ॥
जय जय वामनरूप मुरारे ।
मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥१६॥

गीतार्थेन श्लोकः

हस्ते न्यस्तमनेन वारि बलिना देयं किमस्मै मये-
त्यन्विष्य क्रमणच्छलेन परितो द्राग् ब्रह्मलोकावधि ।
एतद्योग्यमवीक्ष्य[2] तत्र किमपि ब्रह्मादिभिर्दुर्लभः
पादस्दर्शमणिस्त्वयास्य शिरसि श्रीमन्[3] ! प्रसादीकृतः ॥१७॥

क्षत्रियगलगलदविरतशोणित[4]सलिलभरैरपतापम् ।
स्नपयसि जगदिदमुदितदयोदय वितरसि वित्तकलापम् ॥
जय जय भृगुपतिरूप मुरारे ।
मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥१८॥

गीतार्थेन श्लोकः

आविर्भूय भृगो कुलेऽतिविमले जाग्रत्कुठाराहति-
क्षुण्णक्षत्रियकण्ठशोणितजलैस्तापोऽपनीतः सताम् ।
दत्ता भूरपि कश्यपाय मुनये पाथोधिरुत्सारितो
बाणेनैकतरेण नाथ ! भवतः सर्वं हि लोकोत्तरम् ॥१९॥

सहजकुटिलमपि किमपि [5]बिभीषणमपि कपिपतिमनुकूलम् ।
त्वयि विनतं सुगृहीतगुणो[6] धनुरिव नयसि श्रुतिमूलम्

१. 'मनोचित०'—आ. २. 'नैत०'—ए. ३. 'श्रीमत्'—ए. ४. '०रलशो०'—ऊ, ए. ५. 'विभी०'—आ, ए. ६. '०गुणौ'—आ.

जय जय रामशरीर मुरारे।
मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥२०॥

गीतार्थेन श्लोकः

कोदण्डं सहजातिवक्रिम [1]चलत्काठिन्यमप्यानतं
सुग्रीवं च [2]बिभीषणं च सुगुणग्राही त्वमन्वग्रहीः।
उन्नद्धं बहुवाहिनीपरिचयादब्धिं दशास्यं च तं
श्रीदर्पादनमन्तमीश सदनुग्राही हरे! न्यग्रहीः ॥२१॥

हलहतिभीतिमिलितयमुनाकृ[3]त इनमिव याचितुमेतम्[4]।
नीलवसन! निवहसि मणिकुण्डलमेकमधिद्युतिकेतम् ॥
जय जय हलधररूप मुरारे।
मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥२२॥

गीतार्थेन श्लोकः

लीलाकल्पितशी[5]रपाणिवपुषो नीलाम्बरं बिभ्रतः
कैलासाचलचुम्बि मेघरुचि ते शेषाद्रिभूषामणेः।
कालिन्दीं[6] हलकृ[7]ष्टिभीतिमिलितामाश्वासयिष्यन्नति[8]-
स्नेहेनोपगतः प्रभाकर इवाभात्येकलं कुण्डलम् ॥२३॥

त्वमिह विमोहयितुं विबुधद्विषम[9]पि निगदन्नुपधर्मम्।
स्थिरयसि सकरुणचित्त सदागमसं[10]मतमहिंसनधर्मम् ॥

१. 'बल०'—अ, 'बला०'—आ. २. 'विभी०'—आ, ऊ, ए. ३. '०दृत'—अ. ४. अत्र मूलपुस्तकस्था टिप्पणी 'आगतम्' इति—आ. ५. '०सीरपाणि०'—ऊ, ए. ६. '०न्दीहल०'—ए ७. '०हलयष्टि०'—आ. ८. '०न्निति'—ऊ. ९. '०मयि नि०'—ऊ १०. '०गमसुमत०'—ऊ, ए.

जय जय बुद्धशरीर मुरारे ।
मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥२४॥

गीतार्थेन श्लोकः

मायाबुद्धवपुर्भृतापि भवता संमोहना[1]यासतां
स्वाभाविक्य[2]वलम्बिता सदयता शोभाकरी ते परम् ।
पश्वालम्भविधायियज्ञनिगमान्निन्दन्नहिंसा[3]परं
धर्मं वस्तुत आगमैरपि मतं यत्त्वं व्यवा[4]स्थापयः ॥२५॥

अङ्कुरयति पल्लवयति सपदि[5] हि सुकृततरुं कलिदग्धम् ।
त्वदसिघनः खलरुधिरपयोभरवि[6]किरणतोऽतिविदग्धम् ॥
जय जय कल्किशरीर मुरारे ।
मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥२६॥

गीतार्थेन श्लोकः

क्षुण्णम्लेच्छ[7]गलप्रणालिविगलत्कीलालधारा[8]भरै-
रुक्षन् क्षोणितलं क्षणक्षणघनः कौक्षेयधाराधरः ।
बा[9]हुव्योम्नि तवोल्लसन् कलितपोत्तापोपतप्तं तपो-
वृक्षं पल्लवितं करोति सुतरां कल्किस्वरूप प्रभो ! ॥२७॥

१. '०हनोपासना०'—आ. २. '०क्यविल०'—ऊ. ३. '०हिंसा परं'—अ, ऊ, ए. ४. 'व्यवस्था०'—ऊ, ए. ५. 'सपदीह'—ए ६. '०विकरण०'—ऊ, ए. ७. '०म्लेञ्छ०'—अ. ८. '०दाराभरै०' —आ. ९. 'बाहुव्योम्नि'—ए.

[1]गीतमिदमखिलविबुधसमादनममृतमिमवानव[2]गीतम् ।
घनरुचिरुचिर ! चराचरकारण ! तव पदयुगमुपनीतम् ॥
[3]जय जय दशविधरूप मुरारे ।
मङ्गलमय मधुसूदन माधव करुणाकर कलुषारे ॥२८॥[4]

उद्यत्ताप[5]तपातपाकुलतया नष्टस्वरूपक्रमा
गर्ते क्वापि मृता इव प्रपतिता एते जगद्दर्दुराः ।
मेघश्याम ! [6]तव [7]प्रसादवशतो लीलामृत[8]स्राविणः
संजीवन्ति रटन्ति चारुसुषमामञ्चन्ति चञ्चन्ति च ॥२९॥

(ततः प्रविशत्यविज्ञातलक्षणः ।)

**अविज्ञातलक्षणः**—साधु नवलक्षणे ! साधु ।

धन्यासि त्वमिव त्वमेव जगतां मान्या वदान्या यया
नीतो हन्त पुर[9]ञ्जनो विनयनान्मत्सख्ययोग्यां दशाम् ।

१. अस्य पद्यस्य प्रथमपङ्क्तिद्वयस्य स्थाने ऊ पुस्तके ए मुद्रणे च भिन्नपाठमधस्तनं पङ्क्तिद्वयं दृश्यतेः—
श्रीरमणस्य दशाकृतिवर्णनमिति कविकृष्णसुगीतम् ।
जनयति मधुरिपुपदसेवकचेतसि निभृतममृतमिव पीतम् ॥
२. '०नवमीतम्'—आ. ३. एतदादि द्वितीयपङ्क्तिद्वयं नास्ति—ए.
४. अत ऊर्ध्वं निम्नमतिरिक्तं पद्यं दृश्यते:—
मायारूपविहारी परमाद्भुतचरितविस्तारी ।
गोपालीरसशाली मुदं सदा दिशतु वनमाली ॥—ऊ, ए.
५. '०तापनया तयाकुलतया'—आ. ६. '०तनो'—ए. ७. 'सदैव भवतो'—ए. ८. '०श्राविणः'—अ. ९. '०ञ्जनोऽपि विनयन्म०'—ऊ.

हस्तादर्श इवाम्बुदानिलहतो भूत्या मुखप्रेक्ष्यतां[1]

रत्नं शाणशलाकयेव समलासङ्गं विभूषार्हताम्[2] ॥३०॥

चिरायुः[3]—

मद्दर्शनोल्लसितलोचनचित्तवृत्ते-

सख्युः समीक्ष्य सुषमां सुखमाहरिष्ये ।

स्वालोकदर्शितमुदः कुमुदस्य पूर्ण-[4]

पीयूषभानुरिव भानुरिवाम्बुजस्य ॥३१॥

[5]अद्यासावपि जानाति मित्रादर्शनजां व्यथाम्[6] ।

तदालोकजमामोदं वेत्तु चाम्भोजचक्रवत् ॥३२॥

(विलोक्य) एष मम सखा—

श्रीमत्पन्नखचन्द्रचुम्बितमनः शीतांशुकान्तद्रवी-

भावव्यञ्जकमोदजाश्रुसलिलासारैः समापूरितम् ।

अर्घीकृत्य निजं वपुः प्रविलसद्रोमाञ्चदूर्वाङ्कुरं

प्रेमोद्रेकवशंवदोऽर्पयति मे पादारविन्दोपरि ॥३३॥

(इति मन्दमन्दमुपसर्पति[7] ।)

**नवलक्षणा**—एष महितमहिमा[8] महायोगी ।

**वैदर्भी**—कुत्र ? कुत्र ?

(उभे सरभसमुत्थाय यथोचितोपचारमाचरतः[9] ।)

---

१. 'मुखप्रेक्षतां'—अ, आ, 'मुखं प्रेक्ष्यतां'—ए. २. 'त्विषामर्ह०'—ए. ३. पदद्वयं नास्ति—ऊ, ए; '०दथ'—आ. ४. 'पूर्णं'—आ. ५. पद्यात्प्राग् 'अपि च' इत्यधिकम्—ऊ, ए. ६. अतः परमेकं पत्रं (२२ तमं) नष्टम्—ऊ. ७. 'मन्दं मन्द०'—ए. ८. 'त्रिभुवनमहित०'—ए. ९. 'सत्कुरुतः ।'—ए.

**अविज्ञातलक्षणः**——सखे ! परिष्वजस्व माम् । अपि जानासि प्राचीनं[1] सखायं माम्[2] ?

(वैदर्भी मुखमवलोकते ।)

**अविज्ञातलक्षणः**——

सखायावावां स्वः सहजधवलौ मानसगृहा-
विहायातस्त्वं मां स्वैरसरसि[3] विहायातिचपलः ।
जले ग्राम्ये मज्जन्नथ समभवः पङ्कमलिनः
पयःसेकादस्याः सपदि ननु योऽहं त्वमसि सः ॥३४॥

स त्वं नासि पतिः पुरञ्जन ! पुरञ्जन्या यया लीलया
संरुद्धः[4] पुरपञ्जरे नवमुखे बद्धो[5] गुणैः कीरवत् ।
नायं वा मलयध्वजस्तव पतिर्यं मन्यसे देवव-
न्मायाकाननपिप्पलाशनपरीपाकोऽयमुज्जृम्भते ॥३५॥

अपि[6] च[6]

कोषे कोषकृता कृमिर्नियमितस्तद्भावनावैभवा[7]-
त्तादूप्यं[8] प्रतिपद्यते तदनिशाध्यासो[9] हि ताद्रूप्यकृत् ।
स्त्रीत्वं त्व च पुरञ्जनीपरवशः प्राप्तस्तदेकाग्रतां[10]-
योगादेवमवेहि नित्यमदनुध्यानेन[11] मद्रूपता ॥३६॥

अपि चावधारय—

१. 'प्राचीनस०'—ए. २. पदं नास्ति——आ, ए. ३. 'सुसरसि'——ए. ४. 'संरुद्धः पुरुषं जदा (?)'——आ. ५. 'बद्धौ'—ए. ६. पदद्वयं नास्ति——ए ७. '०ना वै०'——ए. ८. '०त्तादृप्यं'——ए. ९. '०ध्यासा'—आ. १०. '०ता यो०'——ए. ११. 'ते मदनिशाध्यानेन'——ए.

दयादृष्ट्या मे 'तत्त्वमसि' पदतत्त्वावगमतो
विलीनायां मायामयजवनिकायां तव सखे ! ।
दिवा वा रात्रौ वा जपसि नियतं हंस इति यद्
विपर्या[1]सन्यासे स्फुर[2]तु सहसा सोऽहमिति तत् ॥३७॥

(पुरञ्जनो विचारयति ।)

**अविज्ञातलक्षणः**-–वत्स सुरोचन ! अनुगृहाण मत्सखायम् ।

(प्रविश्य सुरोचनो [3]योगविद्यया पुरञ्जनं [4]प्रविशति ।)

**पुरञ्जनः**—([5]प्रणम्य)

सखे ! सत्यप्यस्मिन्मम तव च भेदव्यपगमे
त्वदीयोऽहं नाथ ! त्वमसि न मदीयः क्वचिदपि ।
तरङ्गः सामुद्रो भवति न च तारङ्ग उदधिः
स्फुलिङ्गश्चाग्नेयो दहनकणकीयो न दहनः ॥३८॥

**अविज्ञातलक्षणः**—सखे ! किं ते भूयः प्रियमुपकरोमि ?

**पुरञ्जनः**—अतः परमपि [6]किं प्रियमस्ति ? यतः—

भवानेतावन्तं समयमुपकुर्वन्नपि सुहृन्
ममान्धस्येवासीद् ग्र[7]हमणि[8]रविज्ञातचरि[9]तैः ।
अथ श्रुत्वा मत्वा किमपि सुनिदिध्यास्यं[10] सुरस-
स्पृशि प्रोन्मीलन्त्यां दृशि सपदि साक्षात्कृत इति ॥३९॥

१. '०र्यासं न्या०'—अ, आ. २. '०रति'—आ. ३. पदं नास्ति—ए. ४. 'प्रवेशयति'—ए. ५. 'संप्र०'—आ. ६. पदं नास्ति—ए. ७. 'गृह०'—आ, ए. ८. '०मणिरिवाज्ञात०'—ए. ९. अत आरभ्य ग्रन्थभागः ऊ पुस्तकेऽपि वर्तते. १०. 'सुनिदध्यास्य'—अ, ऊ, ए.

तथापीदमस्तु—

श्रीतनुच्छविसुवर्णरेखित-
स्वांशुकात्तसतडिद्घनश्रियि ।
कृष्णरूपनिकषे निवेशितं
प्रेमहेम सुपरीक्ष्यतां मम ।।४०।।

अपि च

कालेकाले तडित्वानमृतरसमयीं वृष्टिमिष्टां विधत्ता-
मुर्वीं सस्यौघगुर्वीं सचिवजनहितां भूमिपाः पालयन्तु ।
सर्वः सर्वत्र नन्दत्वखिलगुणगुरौ विन्दतु प्रेमभक्तिं
देवे श्रीवेङ्कटेशे प्रचरतु परितः **कृष्णदत्तस्य** सूक्तिः ।।४१।।

**अविज्ञातलक्षणः**—एवमस्तु ।

(इति निष्क्रान्ताः सर्वे ।)

**इति श्रीपुरञ्जनदुःखभञ्जनो नाम**
**पञ्चमोऽङ्कः ।।५।।**

## ।। पुरञ्जनचरितनाटकं समाप्तम् ।।

---

१. इदं पद्यं नाटकान्तिमपद्यत्वेनोद्धृतम्—उ; ४०-४१ क्रमाङ्कवतोः पद्ययोः स्थानविपर्यासो दृश्यते—ऊ, ए. २. '०साङ्ककात्त०'—उ. ३. '०त्ततडिदुद्घनश्रियि'—आ, '०सतडिद्घनाश्रयि'—उ. ४. '०हेममुपवीक्ष्यतां'—उ, '०हेमसुपरी०'—ए. ५. पदद्वयं पद्यं च नोद्धृतम्—उ. ६. '०मिष्ठां'—ए. ७. '०हित' (=हितं ?)—अ. ८. 'सर्वः'—ऊ, ए. ९. 'व्यङ्क०'—अ, 'व्येङ्क०'—आ. १०. अत उत्तरम्—

"**शाके नन्दनवावनीपतिमिते शुक्लद्वितीयाबुधे**
**चैत्रे नागपुरे ··रघुनृपावासादयोध्यासमे ।**

(शेषमागामिनि पृष्ठे)

(प्राक्पृष्ठतः)

•・・・・” (पुस्तकस्यानन्तरिकमन्तिमं पत्रं नष्टम्)--**अ**;

“श्रीरस्तू । सूभं भवतु । मङ्गलं कल्यानमस्तू । श्रीकृष्णाय नमः । **जेठ सुद्ध २ संमत १८९५** श्री ”—**आ**;

“समाप्तमिदं नाटकमिति ।

**शाकेऽब्दे धरणीवियन्मुनिधरा**संभासमाने शुभे
**माघे मासि दिवामणौ मकरगे विष्णोस्तिथौ** सादरम् ।
**श्रीमन्मैथिलकृष्णदत्त**कृतिना म(=य)न्निर्मितं नाटकं
प्रालेखीत्तदिदं मुदा द्रुततरं **श्रीहेमनाथद्विजः** ।।

शुभमस्तु ।। ”--**उ**;

“समाप्तमिदं नाटकमिति ।

**शाकेऽब्दे धरणीवियन्मुनिधरा**संभासमाने शुभे
**माघे मासि दिवामणौ मकरगे विष्णोस्तिथौ** सादरम् ।
**श्रीमन्माथिलकृष्णदत्तकृतिना** यन्निर्मितं नाटकं
प्रालेखीत्तदिदं मुदा द्रुततरं **श्रीहेमनाथद्विजः** ।।
श्रीमद्भागवतार्णवात्स्वधिषणाजारोग्रमन्थाचलैः
क्षुब्धादुत्तमशास्त्रभारविलस(?)द्रज्जुप्रबन्धोज्ज्वलैः ।
यत्नात्सद्वरनाटकामृतमिदं शीघ्रं समुत्पादितं
तेन श्रीः पुरुषोत्तमेन विबुधैस्तत्सर्वदास्वाद्यताम् ।।

शुभमस्तु ।। श्रीरस्तु ।। ॐनमः श्रीकृष्णाय शिवाय च ।। ”—**ऊ**;

“समाप्तोऽयं ग्रन्थः ।। प्रशस्तिः

नमः परमहंसमनोमिलिन्दास्वादितपदारविन्दामृतमकरन्दाय जगदानन्दकन्दाय गोविन्दाय ।

नमोऽखिलदेवविहितसेवश्रीविश्वनाथाय ।

नमोऽखिलपुमर्थदानवित्तचित्तायै श्रीमदन्नपूर्णायै ।

शुभमस्तु । श्रीरस्तु ।

(शेषमागामिनि पृष्ठे)

(प्राक्-पृष्ठतः)

**शाके लोचनधर्ममोचनहयक्षोणीभिरुद्भासिते ।**
**माघे मासि सुधांशुभासिनि बलत्पक्षेऽधिसत्सप्तमि ।**
**काश्या**मिन्दुकलावतंसचरणाम्भोजालिरेतन्मुदा
पुस्तं शस्तमलीलिखद् द्रुतमिदं **श्रीहेमनाथः कविः** ॥१॥

यस्योदारयशोविशोभिधिषणादानैः समं वेधसा
ज्ञातुं चन्द्रसुरेज्यकल्पतरवो नूनं तुलायां धृताः ।
तुच्छत्वाद् गगने सुधाकरगुरू यातौ च कल्पद्रुमो
देवाधीशवने प्रतिष्ठितिमसौ प्राप स्फुटं सन्मतेः ॥२॥

कालुष्यं प्रोज्जिहाना सकलजनमनोह्लादना संददाना
नित्यानन्दं दधाना रुचिरविधुरुचिं शोभमाना जगत्सु ।
मुक्ताहाराभिरामा जगति विजयते यस्य कीर्तिर्विशाला
गङ्गाधारेव सारा विबुधवरकृतानल्पभूतिस्तुतिर्हि ॥३॥

तस्योदारविचारचारुचरितस्याज्ञामवाप्यादराद्
**वेणीरामसुपण्डितस्य** लिखितं पुस्तं समस्तं द्रुतम् ।
काशीनाथपदारविन्दविलसत्सच्चित्तपुष्पन्धय-
स्यानेकद्विजराजिगीतसुयशोराशेरधिक्ष्मातलम् ॥४॥

मानं वामनमेव पङ्कजदृशे स्वीकार्य येनार्थिने
दत्ता गोस्त्रिपदाङ्कितेत्यसुवचा तस्यापि कीर्तिर्बलेः ।
**वेणीरामकपण्डितस्य** नियतं संमानपूर्वं मुदा
दानान्यर्थिकुलाय संप्रददतः कीर्तिः कथं वर्ण्यताम् ॥५॥

अस्तु "—ए.

# नाटकस्थपद्यानां सूचिः ।

( कोष्ठस्था अङ्कास्तत्तदङ्कगतक्रमनिर्देशकाः । )

# Corrigenda (शुद्धिपत्रम्)

| Page | Line | Incorrect | Correct |
|---|---|---|---|
| | | (Introduction) | |
| 14 | 12 | कर्णो | कर्णौ |
| 15 | 24 | Veṅkatanātha | Veṅkaṭanātha |
| ,, | 26 | महापराजय | मोहपराजय |
| ,, | 27 | Yaśahpāla | Yaśaḥpāla |
| 19 | 24 | साहित्यदर्शन | साहित्यदर्पण |
| 22 | 13 | ...यंशी | ...यंशो |
| 24 | 22 | ...kaumudi | ...kaumudī |
| ,, | 26 | माऽशङ्की: | मा शङ्की: |
| 31 | 22 | ··—टीका—- | ···—-टीका)—- |
| ,, | 26 | Nātakas | Nāṭakas |
| 33 | 10 | Colohpon | Colophon |
| 35 | 17 | कथ | कथ— |
| 37 | 9 | दयार्दे | दयार्द्रे |
| ,, | 10 | aad | and |
| ,, | 14 | Kava. . . . | Kuva. . . . |
| 42 | 10 | gainst | against |
| 47 | 13 | hy | by |
| 48 | Page-heading | Purañjancarita | Purañjanacarita |
| ,, | 5 | Cimaṇa. . | Cimaṇā. . |
| 51 | 20 | ··yāṇa | ··yaṇa |
| 62 | 12 | अ | आ |

| Page | Line | Incorreet | Correct |
|---|---|---|---|
| | | (Text) | |
| २३ | १८ | नातिथ्य | नातिथ्यं |
| ३५ | ११ | सबलय | सबलया |
| ५६ | १८ | ०तरङ्गिणि | ०तरङ्गिणिं |
| ५७ | १८ | व्यते | ०यते |
| ६१ | १४ | श्वासौघेन | श्वासौघेन |
| ,, | १६ | भवज्ति | भवन्ति |
| ६२ | १४ | ०स्त्रतयेति कुञ्चिष० | ०स्त्रपयेति कुञ्चित० |
| ६३ | ९ | ०स्दर्श० | ०स्पर्श० |
| ,, | १५ | भृगो | भृगोः |
| ,, | २० | ०मूलम् | मूलम् ॥ |
| ६४ | ४ | चलत्० | वलत्० |

# Vidarbha Samshodhana Mandal, Nagpur

## Some Publications

### English

1. **Studies in Indology, Vol I** (A Collection of 26 research articles) by Dr. V. V. Mirashi. Rs. 15

### Marathi

2. **नागपूरकर भोसल्यांची बखर** (A Chronicle of the Bhoslas of Nagpur, Second Edition) by Y. M. Kale Rs. 2-50
3. **नागपूरचा सांस्कृतिक इतिहास** ( A Cultural History of Nagpur) by Shri D. G. Landge Rs. 2-00
4. **संशोधन मुक्तावलि, सर, १** (A Collection of Research Articles) by Dr. V. V. Mirashi Rs. 4-00
5. **औपनिषदिक जीवनसौख्य** ( A Realistic and and Rationalistic Interpretation of the Upanishads ) by Dr. K. L. Daftari Rs. 4-00
6. **संशोधन लेखसंग्रह, भाग १** ( A Collection of Research Articles, Vol. I) by H. N. Nene Rs. 4-00
7. **संशोधन मुक्तावलि, सर २** ( A Collection of Research Articles) by Dr. V. V. Mirashi Rs. 4-00
8. **संशोधन मुक्तावलि, सर ३** (A Collection of Research Articles) by Dr. V. V. Mirashi Rs. 4-00

9. मेघदूतांतील रामगिरि अर्थात् रामटेक
(Identification of Rāmagiri mentioned in Kālidāsa's Meghadūta with Rāmṭek).
by Dr. V. V. Mirashi Rs. 3-00

10. ऐतिहासिक लेखसंग्रह, भाग १ (A Collection of Historical Documents edited by Dr. Y. K. Deshpande and Shri D. G. Landge) Rs. 5-00

11. संशोधनाञ्जलि, (A Collection of Research Articles) by Shri D. G. Landge Rs. 5-00

12. विदर्भ संशोधन मंडळ वार्षिक १९५८ (Vidarbha Samshodhana Mandala Annual, 1958) Rs. 3-00

13. विदर्भ संशोधन मंडळ वार्षिक १९५९ (Vidarbha Samshodhana Mandala Annual, 1959) Rs. 3-00

## Hindi

14. मेघदूत में रामगिरि अर्थात् रामटेक (Identification of Rāmagiri mentioned in Kālidāsa's Meghadūta with Rāmṭek.)
by Dr. V. V. Mirashi Rs. 3-00